## अभ्यासाः **सामान्यतत्पुरुषः – १** (प्रथमातत्पुरुषः, द्वितीयातत्पुरुषः, तृतीयातत्पुरुषः)

1. मध्याह्ने सूर्यस्य आतपः तीक्ष्णः। मध्याह्ने – मध्यम् अह्नः। तस्मिन्। (प्रथमातत्पुरुषः)
2. तस्य अधरकायस्य स्नसाः (muscles) बृहत्यः सन्ति।
3. गर्तपतिता बालिका उच्चैः नर्दति (shouts)। गर्तपतिता – गर्तं पतिता। (द्वितीयातत्पुरुषः)
4. कार्यालयप्राप्तः कर्मकरः कार्यम् अकरोत्।
5. छात्राः व्यासरचितम् महाभारतं पठन्ति। व्यासरचितम् – व्यासेन रचितम्। (तृतीयातत्पुरुषः)
6. रोगतप्तः औषधं स्वीकरोति।

१. मातृसदृशी शिक्षिका छात्रान् पाठयति।

२. दुर्योधनः अहं युधिष्ठिरं अर्धराज्यं न दास्यामि इति उक्तवान्।

३. हरित्रातः भक्तः नमस्कृतवान्।

४. रामश्रितः भक्तः सन्तुष्टः अभवत्।

५. पुत्रसमः छात्रः गुरुं नमति।

६. गृहगता बालिका भोजनम् अकरोत्।

७. पुत्रीप्राप्तं पारितोषिकं माता च पिता च अभिनन्दतः।

८. सम्मर्दे लोकयाने सा अर्धासने उपविष्टवती।

९. अनुजा शालाप्राप्ताभिः सखीभिः सह क्रीडति।

१०. उत्तमः बालकः गृहपाठं पूर्वाह्णे एव कृतवान्।

११. तारकः ब्रह्मदत्तेन वरेण देवान् पराजितवान्।

१२. प्रेमपूर्णे परिसरे संभाषणस्य अभ्यासं करवाम।

१३. चोराः मध्यरात्रे आगच्छन्ति।

१४. कष्टातीतस्य जनस्य सुखं मधुरतरं भाति।

१५. विषादयुक्तः अर्जुनः युद्धं कर्तुं नोत्सहते।

१६.. नगरप्राप्तः ग्रामीणः विस्मयान्वितोऽभवत्।

१७. अपराह्णे वयं क्रीडाम।

१८. संशयापन्ना छात्रा अध्यापकं पृष्टवती।

१९. लक्ष्मणप्रयुक्तः बाणः मेघनादं व्यदारयत्।

२०. सीता रामस्य प्राणसमा आसीत्।

२१. मध्याह्नस्य भोजनं सम्यगासीत्।

२२. सर्वाः महिलाः मातृसदृश्यः माननीयाः।

२३. विद्याविहीनः पशुः इति सुभाषितं सूचयति।

२४. रज्जुबद्धान् काष्ठान् ग्रामम् आनय।

२५. सीतानुगतः रामः वनं प्राविशत्।

२६. लक्ष्मीसहिताय नारायणाय नमः।

२७. अर्जुनः युद्धे शिवदत्तस्य अस्त्रस्य प्रयोगं कृतवान्।

२८. दुखातीता वृद्धा ततः निर्गता।

२९. विष्णुप्रयुक्तं चक्रं राक्षसं समहरत्।

३०. दण्डताडितः सर्पः निर्गच्छति।